॥ श्रीगुरुभ्यो नमः ॥ ॥ श्रीमहागणाधिपतये नमः ॥

## ॥ अथा स्वर्णाकर्षण शिवस्तोत्रम् ॥

संवर्त उवाच । गिरेर्हिमवतः पृष्टे मंजुवान्नामपर्वतात् ।
तप्यते यत्र भगवांस्तपो नित्यमुमापतिः ॥१॥
वनस्पतीनां मूलेषु शृंगेषु विषमेषु च ।
गुहासु शैलराजस्य यथाकामं यथासुखम् ॥२॥
तत्ररुद्रश्च साध्यश्च विश्वेथा वसवस्तथा ।
यमश्च वरुणश्चैव कुबेरश्च सहानुगाः ॥३॥
भूतानि च पिशाचाश्च नासत्यावपि चाश्विनौ ।
गंधर्वाप्सरसश्चैव यक्षा देवर्षयस्तथा ॥४॥
आदित्या मरुतश्चैव यातुधानाश्च सर्वशः ।
उपासंते महात्मानां बहुरूपमुमापतिम् ॥५॥
रमते भगवांस्तत्र कुबेरानुचरैः सह ।
विकृतैर्विविधाकारैः क्रीडद्भिः पृथिवीपते ॥६॥
श्रिया ज्वलन्दृश्यते वै बालादित्यसमद्युतिः ।
न रूपं शक्यते तस्य संस्थानं वा कदाचन ।
निर्देष्टुं प्राणिभिः कैश्चित्प्राकृतैर्मांसलोचनैः ॥७॥
नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः ।
न जरा क्षुत्पिपासो वा न मृत्युर्भयं नृप ॥८॥
तस्य शैलस्य पार्श्वेषु सर्वेषु जयतांवर ।
धातवो जातरूपस्य रश्मयः सवितुर्यथा ॥९॥
रक्ष्यंते ते कुबेरस्य सहायैरुद्यतायुधैः ।
चिकीर्षद्भिः प्रियं राजन् कुबेरस्य महात्मनः ॥१०॥
तत्र गत्वा समन्वास्य महायोगेश्वरं शिवं ।
कुरु प्रमाणं राजर्षे ! भक्त्या परमया यतुः ॥११॥

तस्मै भगवते कृत्वा नमः शर्वाय वेधसे ।
ऐभिस्तं नामभिर्देवं सर्वविद्याधरं स्तुहि ॥१२॥
रुद्राय शितिकंठाय सुरूपाय सुवर्चसे ।
कपर्दिने करालाय हर्यक्ष्णे वरदाय च ॥१३॥
त्र्यक्ष्णे पूष्णो दंतभिदे वामनाय शिवाय च ।
याम्यायाव्यक्तरूपाय सद्वृत्ते शंकराय च ॥१४॥
क्षेम्याय हरिकेशाय स्थाणवे पुरुषाय च ।
हरिनेत्राय मुंडाय कृद्दयोत्तरणाय च ॥१५॥
भास्वराय सुतीर्थाय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥१६॥
गिरीशाय प्रशांताय यतये चीरवाससे ।
बिल्वदंडाय सिद्धाय सर्वदंडधराय च ॥१७॥
मृगव्याधाय महते धन्विनेऽथ भवाय च ।
वराय सोमवक्त्राय सिद्धमंत्राय चक्षुषे ॥१९॥
हिरण्यबाहवे राजन्नुग्राय पतये दिशां ।
लेलिहानाय गोष्ठाय सिद्धमंत्राय वृष्णये ॥२०॥
पशूनां पतये चैव भूतानां पतये नमः ।
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ॥२१॥
अभिवक्त्राय पतये सर्वदेवमयाय च ।
स्रुवहस्ताय पतये धन्विने भार्गवाय च ।
अजाय कृष्णनेत्राय विरूपाक्षाय चैव हि ॥२२॥
तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च ।
महात्मने ह्यनंगाय सर्वाय पतये विशाम् ॥२३॥
तथा रुद्राय पतये पृथवे कृत्तिवाससे ।
विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे ।

वसुरेतः सुवपुषे पृथवे कृत्तिवाससे ॥२४॥
कपालमालिने चैव सुवर्णमुकुटाय च ।
महादेवाय कृष्णाय त्र्यंबकायानघाय च ॥२५॥
क्रोधनायनृशंसाय मृदवे बाहुशालिने ।
दंडिने तप्ततपसे तथैवाक्रूरकर्मणे ॥२६॥
सहस्रशिरसे चैव सहस्रचरणाय च ।
नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे ॥२७॥
पिनाकिनं महादेवं महाभोगिनमव्ययं ।
त्रिशूलहस्तं वरदं त्र्यंबकं भुवनेश्वरम् ॥२८॥
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसं ।
प्रभवं सर्वभूतानां धातारं धरणीधरम् ॥२९॥
ईशानं शंकरं सर्वं शिवं वित्तेश्वरं भवं ।
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥३०॥
विरूपाक्षं दशभुजं विष्यंदं गोवृषध्वजं ।
उग्रं स्थाणुं शिवं रौद्रं शर्वं गौरीशमीश्वरम् ॥३१॥
शितिकंठमजं शुक्रं पृथुं पृथुहरं वरं ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥३२॥
प्रणम्य शिरसा देव मनंगांगहरं हरं ।
शरण्यं शरणं याहि महादेवं चतुर्मुखम् ॥३३॥
विरोचमानं वपुषा दिव्याभरण भूषितं ।
अनाद्यंतमजं शंभुं सर्वव्यापिनमीश्वरम् ॥३४॥
निस्त्रैगुण्यं निरुद्वेगं निर्मलं निधिमोजसं ।
प्रणम्यः प्रांजलिः शर्वं प्रयामि शरणं हरम् ॥३५॥
सम्मान्यं निश्चलं नित्यमकारुण्यमलेपनं ।
अध्यात्मवेदमासाद्य प्रयामि शरणं मुहुः ॥३६॥

यस्य नित्यं विदुः स्थानं मोक्षमध्यात्मचिंतका ।
योगीशं तत्त्वमार्गस्थाः कैवल्यं पदमक्षरम् ॥३७॥
यं विदुः संगिना मुक्ताः सामान्यं समदर्शिनः ।
तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् ॥३८॥
असृजद्यस्तु भूतादीन्सप्त लोकान्सनातनान् ।
स्थितः सत्योपरि स्थाणुस्तं प्रपद्ये सनताननम् ॥३९॥
भक्तानां सुलभं तं हि दुर्लभं दूरपातिनां ।
अदूरस्थममुं देवं प्रकृतेः परतः स्थितम् ॥४०॥
नमामि सर्वलोकस्थं व्रजामि शरणं शिवं ।
ऐवं कृत्वा नमस्तस्मै महादेवाय रंहसे ।
महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि ॥४१॥
लभंते गाणपत्यं च तदेकाग्राहि मानवः ।
किं पुनः स्वर्णभंडानि तस्मात्त्वं गच्छमा चिरम् ॥४२॥
महत्तरं हि ते लाभं हस्त्यश्वोष्ट्रादिभिः सह ।
सुवर्णमाहरिष्यंतस्तत्र गच्छंतु ते नराः ॥४३॥
व्यासौवाच । इत्युक्त्वः स वचस्तस्य चक्रे कारंधमात्मजः ।
गंगाधरं नमस्कृत्य लब्धवान्धनमुत्तमम् ॥४४॥
कुबेर इव तत्प्राप्य महादेवप्रसादतः ।
ततोऽतिमनुषां सर्वं चक्रे यज्ञस्य संविधिम् ॥४५॥
सौवर्णानि च भाण्डानि संचक्रुस्तत्र शिल्पिनः ।
शालश्च सर्वसंभारांस्तत्र संवर्तशासनात् ॥४६॥

B.N. Shrinath Udupa - TRIPURASHRI #2/217 - Karikallkatte - Japthi Post
Kundapur TQ - Udupi DT 576211
Email:-shrinath.udupa@gmail.com - Cell : +91-9740069904